# *श्री मोक्ष विंषक स्तोत्र*

ॐ नमोऽस्त्व अनन्तपतये अक्षयाय महात्मने ।
जलेशाय देवाय पद्मनाभाय विष्णवे ॥ 1 ॥

सप्तसूर्यवपुः कृत्वा त्रींल्लोकान् क्रान्तवानसि ।
भगवन् कालकालस्त्वं तेन सत्येन मोक्षय ॥ 2 ॥

नष्ट चन्द्रार्क गगने क्षीण यज्ञ तपः क्रिये ।
पुनश्चिन्तयसे लोकांस्तेन सत्येन मोक्षय ॥ 3 ॥

ब्रह्म रुद्रेन्द्र वाय्वग्नि सरिद्भुजग पर्वताः ।
त्वत्स्था दृष्टा द्विजेन्द्रेण तेन सत्येन मोक्षय ॥ 4 ॥

मार्कण्डेन पुरा कल्पे प्रविश्य जठरं तव ।
चराचरगतं दृष्टं तेन सत्येन मोक्षय ॥ 5 ॥

एको विद्या सहायस्त्वं योगी योगमुपागतः ।
पुनः त्रैलोक्य मृत्सृज्य तेन सत्येन मोक्षय ॥ 6 ॥

जलशय्यां उपासीनो योगनिद्रां उपागतः ।
लोकांश्चिन्तयसे भूयः तेन सत्येन मोक्षय ॥ 7 ॥

वाराहं रूपं आस्थाय वेद यज्ञ पुरस्कृतम् ।
धरा जलोद्धृता येन तेन सत्येन मोक्षय ॥ 8 ॥

उद्धृत्य दंष्ट्रया यज्ञांस्त्रीन् पिण्डान्कृत वानसि ।
त्वं पितृणामपि हरे तेन सत्येन मोक्षय ॥ 9 ॥

प्रदुद्रुवुः सुराः सर्वे हिरण्याक्ष भयार्दिताः ।
परिस्त्राताः त्वया देव तेन सत्येन मोक्षय ॥ 10 ॥

दीर्घवक्त्रेण रूपेण हिरण्याक्षस्य संयुगे ।
शिरो जहार चक्रेण तेन सत्येन मोक्षय ॥ 11 ॥

भग्न मूर्धास्थिमः तिष्ठो हिरण्यकशिपुः पुरा ।
हुङ्कारेण हतो दैत्यः तेन सत्येन मोक्षय ॥ 12 ॥

दानवाभ्यां हृता वेदा ब्रह्मणः पश्यतः पुरा ।
परित्राताः त्वया देव तेन सत्येन मोक्षय ॥ 13 ॥

कृत्वा हयशिरोरूपं हत्वा तु मधुकैटभो ।
ब्रह्मणे तेऽर्पिता वेदाः तेन सत्येन मोक्षय ॥ 14 ॥

देव दानव गन्धर्वा यक्ष सिद्ध महोरगाः ।
अन्तं तव न पश्यन्ति तेन सत्येन मोक्षय ॥ 15 ॥

अपां तरतमा नाम जातो देवस्य वै सुतः ।
कृताश्च तेन वेदार्था तेन सत्येन मोक्षय ॥ 16 ॥

वेद यज्ञ अग्निहोत्राणि पितृयज्ञ हवींषि च ।
रहस्यं तव देवस्य तेन सत्येन मोक्षय ॥ 17 ॥

ऋषिः दीर्घतमा नाम जात्यन्धो गुरुशापतः ।
त्वत् प्रसादाच्च चक्षुष्मां तेन सत्येन मोक्षय ॥ 18 ॥

ग्राहग्रस्तं गजेन्द्रं च दीनं मृत्युवशं गतम् ।
भक्तं मोक्षितवां त्वं हि तेन सत्येन मोक्षय ॥ 19 ॥

अक्षयश्च अव्ययश्च त्वं ब्रह्मण्यो भक्तवत्सलः ।
उच्छ्रितानां नियन्तासि तेन सत्येन मोक्षय ॥ 20 ॥

शङ्खं चक्रं गदा पद्मं शार्ङ्गं गरुडमेव च ।
प्रसादयामि शिरसा ते बन्दान् मोक्षयन्तु माम् ॥ 21 ॥

॥ इति श्री हरिवंश पुराणे भविष्य पर्वे मोक्षविंशक स्तोत्रं संपूर्णम् ॥